# ॥ सीतोपनिषत् ॥

इच्छाज्ञानक्रियाशक्तित्रयं यद्भावसाधनम् ।
तद्ब्रह्मसत्तासामान्यं सीतातत्त्वमुपास्महे ॥

ॐ भद्रं कर्णेभिः श्रुणुयाम देवाः ।
भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवा□सस्तनूभिः ।
व्यशेम देवहितं यदायुः ।
स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ।
ॐ शान्तिः शान्तिः शान्तिः ॥

देवा ह वै प्रजापतिमब्रुवन्का सीता किं रूपमिति ।
स होवाच प्रजापतिः सा सीतेति । मूलप्रकृतिरूपत्वात्सा
सीता प्रकृतिः स्मृता । प्रणवप्रकृतिरूपत्वात्सा सीता
प्रकृतिरुच्यते । सीता इति त्रिवर्णात्मा साक्षान्मायामयी
भवेत् । विष्णुः प्रपञ्चबीजं च माया ईकार उच्यते ।
सकारः सत्यममृतं प्राप्तिः सोमश्च कीर्त्यते ।
तकारस्तारलक्ष्म्या च वैराजः प्रस्तरः स्मृतः ।
ईकाररूपिणी सोमामृतावयवदिव्यालङ्कारस्रङ्मौक्तिका-
द्याभरणलङ्कृता महामायाऽव्यक्तरूपिणी व्यक्ता भवति ।
प्रथमा शब्दब्रह्ममयी स्वाध्यायकाले प्रसन्ना
उद्भावनकरी सात्मिका द्वितीया भूतले हलाग्रे समुत्पन्ना
तृतीया ईकाररूपिणी अव्यक्तस्वरूपा भवतीति सीता
इत्युदाहरन्ति । शौनकीये । श्रीरामसान्निध्यवशा-
ज्जगदानन्दकारिणी । उत्पत्तिस्थितिसंहारकारिणी सर्वदेहिनाम् ।
सीता भगवती ज्ञेया मूलप्रकृतिसंज्ञिता । प्रणवत्वा-
त्प्रकृरिति वदन्ति ब्रह्मवादिन इति । अथातो ब्रह्मजिज्ञासेति च ।

सा सर्ववेदमयी सर्वदेवमयी सर्वलोकमयी सर्वकीर्तिमयी सर्वधर्ममयी सर्वाधारकार्यकारणमयी महालक्ष्मी-र्देवेशस्य भिन्नाभिन्नरूपा चेतनाचेतनात्मिका ब्रह्मस्थावरात्मा तद्गुणकर्मविभागभेदाच्छरीरूपा देवर्षिमनुष्यगन्धर्वरूपा असुरराक्षसभूतप्रेत-पिशाचभूतादिभूतशरीरूपा भूतेन्द्रियमनःप्राणरूपेति च विज्ञायते ।

सा देवी त्रिविधा भवति शक्त्यासना इच्छाशक्तिः क्रियाशक्तिः साक्षाच्छक्तिरिति । इच्छाशक्तिस्त्रिविधा भवति । श्रीभूमिनीलात्मिका भद्ररूपिणी प्रभावरूपिणी सोमसूर्याग्निरूपा भवति । सोमात्मिका ओषधीनां प्रभवति कल्पवृक्षपुष्पफललतागुल्मात्मिका औषधभेषजात्मिका अमृतरूपा देवानां महस्तोम-फलप्रदा अमृतेन तृप्तिं जनयन्ती देवानामन्नेन पशूनां तृणेन तत्तज्जीवानां सूर्यादिसकलभुवन-प्रकाशिनी दिवा च रात्रिः कालकलानिमेषमारभ्य घटिकाष्टयामदिवस(वार)रात्रिभेदेन पक्षमासर्त्वयनसंवत्सरभेदेन मनुष्याणां शतायुःकल्पनया प्रकाशमाना चिरक्षिप्रव्यपदेशेन निमेषमारभ्य परार्धपर्यन्तं कालचक्रं जगच्चक्रमित्यादिप्रकारेण चक्रवत्परिवर्तमानाः सर्वस्यैतस्यैव कालस्य विभागविशेषाः प्रकाशरूपाः कालरूपा भवन्ति । अग्निरूपा अन्नपानादिप्राणिनां क्षुत्तृष्णात्मिका देवानां मुखरूपा वनौषधीनां शीतोष्णरूपा काष्ठेष्वन्तर्बहिश्च नित्यानित्यरूपा भवति । श्रीदेवी त्रिविधं रूपं कृत्वा भगवत्सङ्कल्पानु-गुण्येन लोकरक्षणार्थं रूपं धारयति । श्रीरिति लक्ष्मीरिति लक्ष्यमाणा भवतीति विज्ञायते । भूदेवी ससागरांभः-सप्तद्वीपा वसुन्धरा भूरादिचतुर्दशभुवनाना-

माधाराधेया प्रणवात्मिका भवति । नीला च मुख-
विद्युन्मालिनी सर्वौषधीनां सर्वप्राणिनां पोषणार्थं
सर्वरूपा भवति । समस्तभुवनस्याधोभागे जलाकारात्मिका
मण्डूकमयेति भुवनाधारेति विज्ञायते ॥

क्रियाशक्तिस्वरूपं हरेर्मुखान्नादः । तन्नादाद्बिन्दुः ।
बिन्दोरोङ्कारः । ओङ्कारात्परतो राम वैखानसपर्वतः ।
तत्पर्वते कर्मज्ञानमयीभिर्बहुशाखा भवन्ति । तत्र
त्रयीमयं शास्त्रमाद्यं सर्वार्थदर्शनम् ।
ऋग्यजुःसामरूपत्वात्त्रयीति परिकीर्तिता । कार्यसिद्धेन चतुर्धा
परिकीर्तिता । ऋचो यजूंषि सामानि अथर्वाङ्गिरसस्तथा ।
चातुर्होत्रप्रधानत्वाल्लिङ्गादित्रितयं त्रयी । अथर्वाङ्गिरसं
रूपं सामऋग्यजुरात्मकम् । तथा दिशन्त्याभिचार-
सामान्येन पृथक्पृथक् । एकविंशतिशाखायामृग्वेदः
परिकीर्तितः । शतं च नवशाखासु यजुषामेव जन्मनाम् ।
साम्नः सहस्रशाखाः स्युः पञ्चशाखा अथर्वणः ।
वैखानसमतस्तस्मिन्नादौ प्रत्यक्षदर्शनम् । स्मर्यते
मुनिभिर्नित्यं वैखानसमतः परम् । कल्पो व्याकरणं शिक्षा
निरुक्तं ज्योतिषं छन्द एतानि षडङ्गानि ॥

उपाङ्गमयनं चैव मीमांसान्यायविस्तरः ।
धर्मज्ञसेवितार्थं च वेदवेदोऽधिकं तथा ।
निबन्धाः सर्वशाखा च समयाचारसङ्गतिः ।
धर्मशास्त्रं महर्षिणामन्तःकरणसम्भृतम् ।
इतिहासपुराणाख्यमुपाङ्गं च प्रकीर्तितम् ।
वास्तुवेदो धनुर्वेदो गान्धर्वश्च तथा मुने ।
आयुर्वेदश्च पञ्चैते उपवेदाः प्रकीर्तिताः ।
दण्डो नीतिश्च वार्ता च विद्या वायुजयः परः ।
एकविंशतिभेदोऽयं स्वप्रकाशः प्रकीर्तितः ।

वैखानसऋषेः पूर्वं विष्णोर्वाणी समुद्भवेत् ।
त्रयीरूपेण सङ्कल्प्य वैखानसऋषेः पुरा ।
उदितो यादृशः पूर्वं तादृशं शृणु मेऽखिलम् ।
शश्वद्ब्रह्ममयं रूपं क्रियाशक्तिरुदाहृता ।
साक्षाच्छक्तिर्भगवतः स्मरणमात्ररूपाविर्भाव-
प्रादुर्भावात्मिका निग्रहानुग्रहरूपा भगवत्सहचारिणी
अनपायिनी अनवरतसहाश्रयिणी उदितानुदिताकारा
निमेषोन्मेषसृष्टिस्थितिसंहारतिरोधानानुग्रहादि-
सर्वशक्तिसामर्थ्यात्साक्षाच्छक्तिरिति गीयते ।
इच्छाशक्तिस्त्रिविधा प्रलयावस्थायां विश्रमणार्थं
भगवतो दक्षिणवक्षःस्थले श्रीवत्साकृतिर्भूत्वा
विश्राम्यतीति सा योगशक्तिः । भोगशक्तिर्भोगरूपा
कल्पवृक्षकामधेनुचिन्तामणिशङ्खपद्म-
निध्यादिनवनिधिसमाश्रिता भगवदुपासकानां
कामनया अकामनया वा भक्तियुक्ता नरं
नित्यनैमित्तिककर्मभिरग्निहोत्रादिभिर्वा यमनियमासन-
प्राणायामप्रत्याहारध्यानधारणासमाधिभि-
र्वालमणन्वपि गोपुरप्राकारादिभिर्विमानादिभिः सह
भगवद्विग्रहार्चापूजोपकरणैरर्चनैः स्नानाधिपर्वा
पितृपूजादिभिरन्नपानादिभिर्वा भगवत्प्रीत्यर्थमुक्त्वा
सर्वं क्रियते । अथातो वीरशक्तिश्चतुर्भुजाऽभयवरद-
पद्मधरा किरीटाभरणयुता सर्वदेवैः परिवृता
कल्पतरुमूले चतुर्भिर्गजै रत्नघटैरमृतजलै-
रभिषिच्यमाना सर्वदैवतैर्ब्रह्मादिभिर्वन्द्यमाना
अणिमाद्यष्टैश्वर्ययुता संमुखे कामधेनुना
स्तूयमाना वेदशास्त्रादिभिः स्तूयमाना जयाद्यप्सर-
स्स्त्रीभिः परिचर्यमाणा आदित्यसोमाभ्यां दीपाभ्यां
प्रकाश्यमाना तुम्बुरुनारदादिभिर्गायमाना
राकासिनीवालीभ्यां छत्रेण ह्लादिनीमायाभ्यां चामरेण

स्वाहास्वधाभ्यां व्यजनेन भृगुपुणादिभिरभ्यर्च्यमाना देवी दिव्यसिंहासने पद्मासनरूढा सकलकारणकार्यकरी लक्ष्मीर्देवस्य पृथग्भवनकल्पना । अलंचकार स्थिरा प्रसन्नलोचना सर्वदेवतैः पूज्यमाना वीरलक्ष्मीरिति विज्ञायत इत्युपनिषत् ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः ।
भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवा□सस्तनूभिः ।
व्यशेम देवहितं यदायुः ।
स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्ताक्ष्यों अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

इति सीतोपनिषत्समाप्ता ॥